॥ सिद्धिलक्ष्मीस्तुती ॥

आकारब्रह्मरूपेण ॐकारं विष्णुमव्ययम् ।
सिद्धिलक्ष्मि! मरालक्ष्मि! लक्ष्यलक्ष्मि नमोऽस्तु ते ॥

याः श्रीः पद्मवने कदम्बशिखरे राजगृहे कुंजरे
श्वेते चाश्वयुते वृषे च युगले यज्ञे च यूपस्थिते ।
शंखे देवकुले नरेन्द्रभवने गंगातटे गोकुले
या श्रीस्तिष्ठति सर्वदा मम गृहे भूयात् सदा निश्चला ॥

यासा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गम्भीरावर्तनाभिः स्तनभरनमिता शुद्धवस्त्रोत्तरीया ।
लक्ष्मिर्दिव्यैर्गजेन्द्रैर्मणि-गण-खचितैः स्नापिता हेमकुम्भै-
र्नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमांगल्ययुक्ता ॥

॥ इति सिद्धिलक्ष्मीस्तुति सम्पूर्णम् ॥